॥ श्रीकृष्णस्तवः १ ॥

देवा ऊचुः -
यज्जागरादिषु भवेषु परं ह्यहेतुः
    हेतुः स्विदस्य विचरन्ति गुणाश्रयेण ।
नैतद्विशन्ति महदिन्द्रियदेवसङ्घा-
    स्तस्मै नमोऽग्निमिव विस्तृतविस्फुलिङ्गाः ॥ १॥

नैवेशितुं प्रभुरयं बलिनां बलीयान्
    माया न शब्द उत नो विषयीकरोति ।
तद्ब्रह्म पूर्णममृतं परमं प्रशान्तं
    शुद्धं परात्परतरं शरणं गताः स्मः ॥ २॥

अंशांशकांशककलाद्यवतारवृन्दै-
    रावेशपूर्णसहितैश्च परस्य यस्य ।
सर्गादयः किल भवन्ति तमेव कृष्णं
    पूर्णात्परं तु परिपूर्णतमं नताः स्मः ॥ ३॥

मन्वन्तरेषु च युगेषु गतागतेषु
    कल्पेषु चांशकलया स्ववपुर्बिभर्षि ।
अद्यैव धाम परिपूर्णतमं तनोषि
    धर्मं विधाय भुवि मङ्गलमातनोषि ॥ ४॥

यद्दुर्लभं विशदयोगिभिरप्यगम्यं
    गम्यं द्रवद्भिरमलाशयभक्तियोगैः ।
आनन्दकन्द चरतस्तव मन्दयानं
    पादारविन्दमकरन्दरजो दधामः ॥ ५॥

पूर्वं तथात्र कमनीयवपुष्मयं त्वां
    कन्दर्पकोटिशतमोहनमद्भुतं च ।
गोलोकधामधिषणद्युतिमादधानं
    राधापतिं धरणिधुर्यधनं दधामः ॥ ६॥

इति गर्गसंहितायां गोलोकखण्डे एकादशाध्यायान्तर्गतः
श्रीकृष्णजननात्पूर्वं देवैः कृतः श्रीकृष्णस्तवः सम्पूर्णः ।